यस्यां नित्यं निहितनयनो हस्तिशैलाधिवासी
द्वन्द्वातीतस्स खलु पुरुषो दृश्यते सत्यकामः ॥ २६

तामासीदन्प्रणम नगरीं भक्तिनम्रेण मूर्ध्ना
जाता्मादौ कृतयुगमुखे धातुरिच्छावशेन ।
यद्वीथीनां करिगिरिपतेर्वाहवेगावधूतान्
अन्यान्रेणूंस्त्रिदशपतयो धारयन्त्युत्तमाङ्गैः ॥ २७

मन्दाधूतात्तदनु महितो निस्सृतश्चूतषण्डात्
पार्श्वे तस्याः पशुपतिशिरश्चन्द्रनीहारवाही ।

---

भूमेः पृथिव्याः उचितविभवं योग्यैश्वर्यभूतं भूषणं आभरणं काञ्चीं काञ्चीनगरं तत्र सत्यव्रतक्षेत्रे द्रक्ष्यसि । यस्यां कांच्यां नित्यं सदा निहितनयनः न्यस्तकक्षाक्षः हस्तिशैले हस्तिगिरौ अधिवासी अधिवस्तुं शीलवान् द्वन्द्वातीतः सुखदुःखादिद्वन्द्वरहितः सत्यकामः यथार्थसङ्कल्पः स पुरुषः प्रसिद्धः परमपुरुषः वरदाख्यो विष्णुः दृश्यते खलु ॥ २६

मुक्तिक्षेत्रभूतां काञ्चीं गत्वा ताम् पुरीं प्रणमेत्याह । तामिति ॥ त्रिदशपतयः देवश्रेष्ठाः यस्याः कांच्या वीथ्यः यद्वीथ्यस्तासां करिगिरिपतेः हस्तिगिरिनाथस्य वरदस्य वाहस्य अश्वस्य वेगेन अवधूतान् समुद्धूतान् धन्यान् (तदश्वपादस्पर्शात्) कृतार्थान् रेणून् पांसून् उत्तमाङ्गैः शिरोभिः धारयन्ति आदौ कृतयुगस्य मुखे प्रारम्भे धातुः ब्रह्मणः इच्छावशेन जातां तां प्रसिद्धां नगरीं काञ्चीं आसीदन् उपगच्छन् (त्वं) भक्त्या नम्रेण नतेन मूर्ध्ना शिरसा प्रणम नमस्कुरु ॥ २७

तत्रागतं त्वां मन्दमारुतोऽपि सेविष्यत इत्याह । मन्देति ॥ तदनु मन्दं आधूताच्चलितात् । चूतानां षण्डात्समूहात् निःसृतः निर्गतः (अनेनमान्द्यमुक्तं) महितः पूजितः तस्याः कांच्याः पार्श्वे पश्चिमपार्श्वभागे (विद्यमानस्य) पशुपतेः एकाम्रनाथाख्यस्य शिवस्य शिरसि (स्थितस्य) चन्द्रस्य नीहारं हिमं ताच्छील्येन वहतीति तथोक्तः (अनेन शैत्यमुक्तं) कम्पायाः कम्पाख्यनद्याः पाथसि जले

दूरात्प्राप्तं प्रियसखमिव त्वामुपैष्यत्यवश्यं
कम्पापाथःकमलवनिकाकामुको गन्धवाहः ॥ २८

वर्णस्तोमैरिव परिणता सप्तभेदैर्महौघैः
मान्या मध्येनगरमभितस्सेविता देवताभिः ।
स्वच्छस्वादुप्रसरसुभगा स्वामिनी वः कवीनां
वेगासंज्ञां वहति महतीं वल्लभा पद्मयोनेः ॥ २९

तीर्थे पुंसां शमितकलुषे तत्र सारस्वताख्ये
स्नात्वा सार्धं मुनिभिरनघैस्सम्यगुल्लासिताङ्गः ।

---

स्थितानां कमलानां वनिकायाः समूहस्य कामुकः कामी (अनेनसौरभ्यमुक्तं) गन्धं वहतीति गन्धवाह वायुः दूरात् प्राप्तं आगतं प्रियसखं इष्टमित्रमिव त्वां अवश्यं उपैष्यति प्राप्स्यति ॥ २८

अत्र तव स्वामिनी सरस्वती नदीरूपेण प्रसृता वेगासंज्ञां बिभर्तीत्याह । **वर्णेति** ॥ वर्णस्तोमैः वर्णसमूहैरिव सप्तभेदैः 'शुक्तिकाकनकाशिप्राकम्पापेयाच मञ्जुला । चण्डवेगा' इत्युक्तसप्तप्राकारैः महौघैः महाप्रवाहैः परिणता प्रादुर्भूता मान्या पूज्या मध्ये नगरस्य मध्येनगरं (अव्ययीभावः) देवताभिः अभितः उभयतः सेविता स्वच्छेन निर्मलेन स्वादुना मधुरेण च प्रसरेण प्रवाहेन सुभगा मनोज्ञा कवीनां के जले वीनां पक्षिणां वः युष्माकं स्वामिनी अधिपत्नी पद्मयोनेः ब्रह्मणः महती सर्वोत्कृष्टा वल्लभा कान्ता सरस्वती वेगासंज्ञा वेगवतीति-नामधेयं वहति धारयति ॥ २९

तत्र तीर्थे ऋषिभिस्सह स्नाने कृते सर्वदर्शित्वपर्यन्तशुद्धिस्तत्र भविष्यतीत्याह । **तीर्थे इति** ॥ पुंसां पुरुषाणां शमितकलुषे विनाशितपापे सारस्वताख्ये तत्र तीर्थे वेगवतीतीर्थे । अनघैः निर्दोषैः मुनिभिः सार्धं सह स्नात्वा सम्यक् उल्ला-

विश्वं चित्ते विगतरजसि व्यञ्जयन्तीमशेषं
वक्ष्यस्यन्तर्बहिरपि परां शुद्धिमक्षेपणीयम् ॥ ३०

तस्यास्तीरे सरसिजभुवस्सौम्य वैतानवेदिः
दिव्यं कुर्वन्द्रविडविषयं दृश्यते हस्तिशैलः ।
यस्योपान्ते कृतवसतयो यापयित्वा शरीरं
वर्तिष्यन्ते वितमसि पदे वासुदेवस्य धन्याः ॥ ३१

सञ्चिन्वाना तरुणतुलसीदामभिस्स्वामभिख्यां
तस्यां वेद्यामनुविदधती शीतलं हव्यवाहम् ।

---

सितानि प्रकाशितानि अङ्गानि यस्य तथोक्तः । त्वं विगतं अपेतं रजः रजोगुणः यस्मात्तत् विगतरजः तस्मिन् चित्ते मनसि अशेषं समस्तं विश्वं लोकं व्यञ्जयन्तीं प्रकाशयन्तीं अक्षेपणीयां अनिवारणीयां परां शुद्धिं अन्तः मनसि बहिः शरीरेऽपि वक्ष्यसि प्राप्स्यसि ॥ ३०

वेगवत्यास्तटे हस्तिशैलो दृश्यते तस्य समीपे वासं कुर्वन्तः चरमकाले देहं विसृज्य वासुदेवस्य पदे तिष्टन्तीत्याह । तस्या इति ।। सौम्य सुन्दर हे हंस तस्याः वेगवत्याः तीरे सरसिजभुवः धातुः वैतानवेदिः यागोत्तरवेदिरूपः हस्तिशैलः करिगिरिः द्रविडानां विषयं देशं दिव्यं प्रशस्तं कुर्वन् दृश्यते यस्य हस्तिशैलस्य उपान्ते समीपे कृता वसतिः वासो यैस्ते कृतवसतयो जनाः शरीरं यापयित्वा विसृज्य वितमसि विगततमोगुणे वासुदेवस्य पदे स्थाने धन्याः कृतार्थाः वर्तिष्यन्ते वासं करिष्यन्ति ॥ ३१

उत्तरवेद्यां श्यामपावकरूपेण नारायणो भासत इत्याह । समिति ।। तरुणीनां सततमम्लानां तुलसीनां दामभिः मालाभिः स्वां स्वीयां अभिख्यां कान्तिं सञ्चिन्वाना सम्पादयन्ती तस्यां वेद्यां उत्तरवेद्यां शीतलं (मनिमन्त्रादिना) अनुष्णं हव्यं वहतीति हव्यवाट् अग्निस्तं अनुविदधती अनुकुर्वती भोगस्य ऐहिकसुखस्य ऐश्वर्यस्य परमपदैश्वर्यस्यच प्रियसहचरैः प्रियसखैः आपादकैरित्यर्थः ।

भोगैश्वर्यप्रियसहचरैः कापि लक्ष्मीकटाक्षैः

भूयः श्यामा भुवनजननी देवता सन्निधत्ते ॥ ३२

लक्ष्मीविद्युल्ललितवपुषं तत्र कारुण्यपूर्णं

माभैषीस्त्वं मरकतशिलामेचकं वीक्ष्य मेघं ।

शुद्धैर्नित्यं परिचितपदस्त्वादृशैर्देवहंसै-

र्हंसीभूतस्सखलुभवतामन्ववायाग्रजन्मा ॥ ३३

सारास्वादी सवनहविषां स्वामिनस्ते सदेवः

शुद्धं चक्षुः श्रुतिपरिषदां चक्षुषां भागधेयं ।

अङ्गीकुर्याद्विनतममृतासारसंवादिभिस्त्वा-

माविर्मोदैरभिमतवरस्थूललक्षैः कटाक्षैः ॥ ३४

---

लक्ष्म्याः कटाक्षैः अपाङ्गदर्शनैः भूयः अत्यन्तं श्यामा भुवनजननी जगत्कारणभूता काऽपि वाचामगोचरा देवता वरद इत्यर्थः सन्निधत्ते सन्निधानं करोति ॥ ३२

तस्यां वेद्यां अपूर्वमेघो वर्तते सतु त्वद्वंशजः तस्मात् साध्वसम्माकुर्वित्याह— **लक्ष्मीति** ॥ तत्र वेद्यां लक्ष्मीरेव विद्युत् तडित् तया ललितं सुन्दरं वपुश्शरीरं यस्य तथोक्तं । कारुण्येन दयारूपजलेन पूर्णस्तं मरकतशिलावत् मेचकं श्यामलं मेघं (मेघत्वेननिगीर्णवरदं) वीक्ष्य माभैषीः भीतिं माकुरु त्वादृशैः त्वत्सदृशैः शुद्धैः देवहंसैः देवश्रेष्ठैः नित्यसूरिभिः परिचितपदः सेवितचरणः हंसीभूतः हंसतयाऽऽविर्भूतः सः मेघः भवतां युष्माकं अन्ववाये वंशे अग्रजन्मा पुरस्ताज्जातः खलु 'हिरण्मयः शकुनिर्ब्रह्मनाम' इति श्रुतिप्रसिद्धः ॥ ३३

**सारेति** ॥ ते तव । स्वामिनः ब्रह्मणः । सवनस्य यज्ञस्य हविषां । सारास्वादी वपाभक्षणशीलः । श्रुतीनां परिषदां समूहानां । शुद्धं निर्दुष्टं । चक्षुः नयनं 'वेदचक्षुः सनातनः' इत्युक्तेः । चक्षुषां आश्रितलोचनानां । भागधेयं भाग्यं सः प्रसिद्धः देवः वरदः विनतं प्रणतं । त्वां । अमृतासारसंवादिभिः अमृतवर्षसदृशैः । आविर्मोदैः आविर्भूतसन्तोषैः । अभिमतवरे इष्टवरविषये स्थूललक्षैः बहुप्रदैः । कटाक्षैः । अङ्गीकुर्यात् स्वीकुर्यात् ॥ ३४

मध्वासक्तं सरसिजमिव स्विन्नमालम्बमानो
देव्या हस्तं तदितरकरन्यस्तलीलारविंदः ।
देवः श्रीमान्यदि सविहरेत्स्वैरमारामभूमौ
व्यक्तो वालव्यजनवपुषा वीजयेस्तं त्वमेव ॥ ३५

जातप्रीतिर्जनपदमथो मध्यमं लङ्घयित्वा
दूराल्लक्ष्यक्रमुकनिवहश्यामलान्याहि चोलान् ।
प्रत्युद्गच्छन्मकरवलनस्तम्भितैस्सह्यजायाः
स्रोतोभेदैर्विविधगतिभिस्संविभक्तावकाशान् ॥ ३६

सन्ध्यारागं सुरभिरजनीसम्भवैरङ्गरागैः
केशैर्ज्योत्स्नातिमिरकलहं पालिकापीडगर्भैः ।

---

मध्विति ॥ मधुना आसक्तं आविष्टं । सरसिजमिव स्विन्नं (कान्तकरस्पर्शात्) जातस्वेदं देव्याः लक्ष्म्याः । हस्तं । आलम्बमानः गृह्णन् तदितरकरे न्यस्तं निक्षिप्तं लीलारविन्दं विलासार्थपद्मं येन तथोक्तः । श्रीमान् देवः क्रीडावान् सः वरदः । आरामस्य उद्यानस्य भूमौ । स्वैरं यथेच्छं । विहरेत् विहारं कुर्याद्यदि । व्यक्तः चक्षुर्गोचरस्सन् । वालव्यजनवत् चामरवत् वपुषा शुक्लशरीरेणधवलपक्षाभ्यामित्यर्थः । तदेवं । त्वमेव । वीजयेः वीजय । विश्रान्तं कुरु ॥ ३५

जातेति ॥ अथो अथ । जातप्रीतिः । मध्यमं मध्यं । जनपदं राष्ट्रं । लङ्घयित्वा अतिक्रम्य । दूरात् लक्ष्येण दृश्यमानेन क्रमुकनिवहेन पूगसमूहेन श्यामलान् कृष्णवर्णान् । प्रत्युद्गच्छतां स्रोतोभिमुखं गच्छतां मकराणां मत्स्यानां वलनेन परिभ्रमणेन स्तम्भितैः । अतएव । विविधगतिभिः । सह्यजायाः कावेर्याः । स्रोतसां प्रवाहाणां भेदैः । संविभक्तावकाशान् पृथक्कृतप्रदेशान् । चोलान् याहि गच्छ ॥ ३६

सन्ध्येति ॥ हे हंस । तेषु देशेषु । सुरभिरजन्याः परिमलयुक्तहरिद्रायाः सम्भवः उत्पत्तिर्येषान्तथोक्तैः । अङ्गरागैरनुलेपनैः सन्ध्यारागं सन्ध्याकालरक्तिः

आबिभ्राणास्सरसिजदृशो हंसदोळाधिरोहा-

दाधास्यन्ते मदकलगिरस्तेषु नेत्रोत्सवं ते ॥ ३७

पृथ्वीलीलातिलकसुभगं पश्चिमं भागमेषां

नाम्ना वर्षं जलचर नदीमातृकं गाहमानः ।

द्रक्ष्यस्यारात्परिमिततया मग्नकैलासदृश्यं

श्वेतं शैलं फणिपतिमिव क्ष्मातलादुज्जिहानम् ॥ ३८

स्फारालोकप्रशमिततमस्सञ्चयं तत्र पुंसां

प्रत्यग्रूपं प्रगुणविभवं प्रार्थनीयं बुधानां ।

नेदीयांसं कुशलनिवहं नन्तुराधास्यते ते

दिव्यं तेजो जलधितनयास्नेहनित्यानुषक्तम् ॥ ३९

---

मानं । पालिकानां क्रमुकपुष्पाणां आपीडाः शेखराः गर्भे मध्ये येषान्तथोक्तैः केशैः कचैः । ज्योत्स्नातिमिरयोः चन्द्रिकान्धकारयोः कलहं विवादञ्च । आबिभ्राणाः वहन्त्यः । मदेन कलगिर अव्यक्तमधुरवाचः । सरसिजदृशः पद्मनयनाः स्त्रियः । डोलासु प्रेङ्खोलिकासु अधिरोहात् आरोहणात् । ते तव । नेत्रोत्सवं । आधास्यन्ते करिष्यन्ति ॥ ३७

ततो वर्षनामनि राज्ये श्वेताद्रिं द्रक्ष्यसीत्याह— पृथ्वीति ॥ जलचर हेहंस त्वं पृथिव्याः भूम्याः लीलातिलकवत् सुभगं सुन्दरं एषां चोलानां पश्चिमं भागं प्रदेशं नाम्ना वर्षं वर्षाख्यं नदीमातृकं नदीप्रवाहपोषितदेशं । गाहमाना प्रविशन् सन् परिमिततया परिच्छिन्नत्वेन मग्नः निमग्नः कैलासः रजतगिरिरिव दृश्यः द्रष्टुं योग्यस्तं अतएव क्ष्मातलात् पातालात् उज्जिहानं उत्पतन्तं फणिपतिं आदिशेषमिवस्थितं श्वेतं शैलं श्वेतपर्वतक्षेत्रं आरात् समीपे द्रक्ष्यसि ॥ ३८

स्फारेति ॥ तत्र श्वेतशैलः पुंसां स्फारेणाधिकेन आलोकेन प्रकाशेन प्रशमितः नाशितः तमसः अज्ञानान्धकारस्य निचयस्समूहः येन तथोक्तं । प्रत्यग्रूपं चेतनरूपं प्रगुणविभवं अधिकैश्वर्यञ्च बुधानां प्राज्ञानां प्रार्थनीयं जलधितनयया

स्निग्धच्छायं तदनु विततं तस्य धामेव नीलं
नीलीपुष्पस्तबकललितं काननं संविचीयाः ।
दृष्टे तस्मिन्ननिमिषवधूनित्यनिर्वेशयोग्ये
स्वर्गोद्यानश्रियमपि लघुं मंस्यते मानसं ते ॥ ४०

कुर्वन्नानाकुसुमरजसा यत्र चित्रं वितानं
पूगारण्ये मृदु विचलयन्पालिकाचामराणि ।
पादन्यासक्षमसवकिरन् क्ष्मातलं पुष्पजालैः
प्रायो वायुः परिजनविधिं पञ्चबाणस्य धत्ते ॥ ४१

---

लक्ष्म्यास्नेहेन नित्यं सदा अनुषक्तं युक्तं दिव्यं अप्रकृतं तेजः परंज्योतिः नन्तुः नमस्कुर्वतः ते तव नेदीयांसं अधिकसमीपस्थितं कुशलनिवहं क्षेमसमूहं आधास्यति करिष्यति ॥ ३९

स्निग्धेति ॥ तदनु स्निग्धा रम्या छाया यस्य तथोक्तं। विततं विस्तीर्णं तस्य पूर्वोक्ततेजोरूपस्य विष्णोः धामेव प्रकाशमिव नीलं नीलवर्णं नीलीनां तन्नामकौषधीनां पुष्पस्तबकैः कुसुमगुच्छैः ललितं सुन्दरं काननं वनं संविचीयाः मार्गयेः अनिमिषवधूनां देवस्त्रीणां नित्यं निर्वेशाय क्रीडाविहाराय योग्ये तस्मिन्नरण्ये दृष्टेसति ते तव मानसं मनः स्वर्गोद्यानस्य नन्दस्य श्रियं शोभामपि लघुं अल्पां मंस्यते विचारयिष्यति ॥ ४०

तत्र वने वायुः मन्मथपरिचर्यां करिष्यतीत्याह—कुर्वन्निति ॥ वायुः यत्र श्वेताद्रौ पूगारण्ये क्रमुकवने नानाकुसुमानां रजसा परागेण चित्रं वितानं उल्लोचं कुर्वन् पालिकाचामराणि क्रमुकपुष्पमयचामराणि मृदु मन्दं विचलयन् कम्पयन् पुष्पाणां जालैः समूहैः क्ष्मातलं भूतलं पादन्यासस्य क्षमं योग्यं यथा तथा अवकिरंश्च सन् पञ्चबाणस्य मन्मथस्य परिजनविधिं सेवककार्यं प्रायः धत्ते धारयिष्यति ॥ ४१

स्रोतोवेगादथ जनपदं सौम्य सीमन्तयन्ती
प्रत्यादेशो विबुधसरितस्स्यन्दते सह्यकन्या ।
काले काले परिणतिवशात्पर्वभेदावकीर्णैः
पुण्ड्रेक्षूणां पुलिनविशदैर्गद्गदा मौक्तिकौघैः ॥ ४२

सह्योत्सङ्गात्सपदि मरुता सागरं नीयमानां
भद्रालापैर्विहितकुशलां त्वादृशानां द्विजानाम् ।
यामस्कन्नास्सरसकुहळीपत्रपातैर्निशान्ते
मन्दस्मेरां मधुपरिमळैर्वासयन्तीव पूगाः ॥ ४३

---

तत्र कावेरी प्रवहतीत्याह—स्रोत इति ॥ अथ सौम्य हे हंस स्रोतसः प्रवाहस्य वेगात् जनपदं देशं सीमन्तवन्तं विभागवन्तं कुर्वती सीमन्तयन्ती विबुधसरितः देवगङ्गायाः प्रत्यादेशः निराकृतिरूपा पुण्ड्रेक्षूणां इक्षुविशेषाणां काले काले परिणतेः परिणामस्य वशात् पर्वणां काण्डग्रन्थीनां भेदेन दलनेन अवकीर्णैः विशीर्णैः पुलिनवद्विशदैः स्वच्छैः मौक्तिकानां ओघैः समूहैः गद्गदा निम्नोन्नता (इक्षुभेदान्मुक्तोत्पत्तिः शास्त्रप्रसिद्धा) सह्यकन्या कावेरी स्यन्दते प्रवहति ॥ ४२

सह्येति ॥ मरुता वायुना सपदि तत्क्षणे सह्यस्य सह्यगिरेः उत्सङ्गात् अङ्कात् सागरं नीयमानां त्वादृशानां त्वत्सदृशानां द्विजानां पक्षिणां भद्रालापैः मङ्गलध्वनिभिः (विप्रणांस्वस्तिवाचनध्वनिभिरितिध्वन्यते) विहितकुशलां कृतमङ्गलां । निशान्ते उदयकाले सरसानां मधुसमेतानां कुहलीपत्राणां क्रमुकपुष्पदळानां पातैः पतनैः मन्दस्मेरां मन्दहासवतीं यां कावेरीं अस्कन्नाः आर्द्राः पूगाः क्रमुकाः मधुपरिमळैः वासयन्तीव वासितां कुर्वन्त इव वर्तन्ते । पितृगृहाद्भर्तृगृहंनीयमानाकन्येव कावेरी भातीति भावः ॥ ४३

तस्मिन्द्रक्ष्यस्यमरमहिळामौळिगन्धैरवन्ध्या-
मातन्वानां व्यपगतरसं मानसो मानसं वः ।
तीर्थैरन्यैरपि परिगतां शुद्धिहेतोस्समन्ता-
च्चन्द्रोल्लासप्रथितयशसस्सम्पदं पुष्करिण्याः ॥ ४४

तीरे तस्या विरचितपदं साधुभिस्सेव्यमानं
श्रद्धायोगाद्विनमिततनुश्शेषपीठं भजेथाः ।
यस्मिन्नस्मत्कुलधनतया सौम्य साकेतभाजः
स्थानं भाव्यं मुनिभिरुदितं श्रीमतो रङ्गधाम्नः ॥ ४५

---

तस्मिन्निति ॥ अमरमहिलानां देवस्त्रीणां मौलिगन्धैः केशपरिमळैः अवन्ध्यां अभिन्नां वः युष्माकं मानसं मनः मानसे मानससरसि व्यपगतरसं प्रीतिरहितं आतन्वानां कुर्वाणां शुद्धिहेतोः स्वशुद्धिनिमित्तं अन्यैः तीर्थैरपि समन्तात् परिगतां परिवृतां चन्द्रस्य उल्लासेन राजयक्ष्मनिराकरणपूर्वमौज्वल्यकरणेन प्रथितयशसः प्रख्यातकीर्तियुक्तायाः पुष्करिण्याः चन्द्रपुष्करिण्याः सम्पदमैश्वर्यं तस्मिन्देशे द्रक्ष्यसि । दक्षशापाद्राजयक्ष्मपीडितश्चन्द्रस्तत्सरसिस्नात्वा रोगान्मुक्तः अतएव तस्याश्चन्द्रपुष्करणीति नामेति पुराणकथा ॥ ४४

तत्तीरस्थितं आविर्भविष्यतः श्रीरङ्गनाथस्य स्थानभूतमनन्तपीठं सेवस्वेत्याह— तीर इति ॥ सौम्य हंस यस्मिन्ननन्तपीठे अस्माकं कुलधनतया साकेतभाजः अयोध्यायां वर्तमानस्य श्रीमतः रङ्गधाम्नः रङ्गनाथस्य स्थानं भाव्यं भवितुमर्हमिति मुनिभिः उदितं उक्तं तस्याः चन्द्रपुष्करिण्याः तीरे विरचितपदं कृताधिष्ठानं साधुभिः सेव्यमानं तत् शेषपीठं अनन्तपीठं श्रद्धायोगात् आदरातिशयात् विनमिततनुस्सन् भजेथाः सेवस्व ॥ ४५

सत्वे दिव्ये स्वयमुदयतस्तस्य धाम्नः प्रसङ्गा-
न्मञ्जूषायां मरकतमिव भ्राजमानं तदन्तः ।
चेतो धावत्युपहितभुजं शेषभोगे शयानं
दीर्घापाङ्गं जलधितनयाजीवितं देवमाद्यम् ॥ ४६

चोराक्रान्तं तदनु विपिनं चोळपाण्ड्यान्तरस्थं
झिल्लीनादश्रवणपरुषं शीघ्रमेव व्यतीयाः ।
तीर्णे तस्मिन्प्रकटय सखे शीतलांस्ते निनादान्
शब्दायन्ते न खलु कवयस्सन्निधौ दुर्जनानाम् ॥ ४७

स्रस्तापीडप्रचलदलकं व्यक्तताटङ्करत्नं
मुक्ताचूर्णस्फुरिततिलकं वक्त्रमुत्तानयन्त्यः ।

---

श्रीरङ्गनाथे मम मनः प्रसर्पतीत्याह—सत्व इति ॥ दिव्ये शुद्धे सत्वे तद्रूपे (विमाने) स्वयं उदयतः आविर्भावं कुर्वतः तस्य श्रीरङ्गनाथस्य धाम्नां अंशूनां प्रसङ्गात् प्रसञ्जनात् मञ्जूषायां पेटिकायां मरकतमिव गारुत्मतरत्नमिव तदन्तः विमानमध्ये भ्राजमानं प्रकाशमानं । उपहितभुजं उपधानीकृतबाहुं शेषस्य अनन्तस्य भोगे शरीरे शयानं शयनं कुर्वाणं दीर्घापाङ्गं दीर्घकटाक्षं जलधितनयायाः लक्ष्म्याः जीवितं प्राणभूतं । आद्यं देवं विष्णुं चेतः मम मनः धावति प्रसर्पति ॥ ४६

ततश्चोळदेशात् पाण्ड्यदेशं गच्छेत्याह—चोरेति ॥ तदनु चोरैः आक्रान्तं चोळपाण्ड्ययोः अन्तरस्थं मध्येस्थितं झिल्लीनां तदाख्यजन्तूनां नादेन श्रवणयोः कर्णयोः परुषं निष्ठुरं । विपिनं वनं शीघ्रमेव व्यतीयाः अतिक्राम सखे तस्मिन् वर्त्मनि तीर्णे अतिक्रान्ते सति शीतलान् ते तव निनादान् प्रकटय प्रकाशय तथाहि कवयः दुर्जनानां सन्निधौ नशब्दायन्तेखलु स्वकवित्वं नप्रकाशयन्ते खलु ॥ ४७

पाण्ड्यदेशस्त्रियस्तव शब्दं मानयिष्यन्तीत्याह—स्रस्तेति ॥ तस्मिन् देशे पाण्ड्यदेशे स्रस्तः च्युतः आपीडः शेखरः यस्मिन्कर्मणितद्यथाभवति तथा प्रक॰ण

देशे तस्मिन्कुवलयदृशो जातकौतूहलास्त्वां
मालादीर्घैर्मधुरविरुतं मानयिष्यन्त्यपाङ्गैः ॥ ४८

नित्यावासं वृषभमचलं सुन्दराख्यस्य विष्णोः
प्रत्यासीदन्सपदि विनतो भागधेयं नतस्स्याः ।
यस्योत्सङ्गे बलिविजयिनस्तस्य मञ्जीरवान्तं
पाथो दिव्यं पशुपतिजटास्पर्शहीनं विभाति ॥ ४९

ईशादस्त्रादधिगतवतां क्षत्रियाणां प्रभावा-
त्कारावासस्मरणचकितैस्सिक्तसस्यान्पयोदैः ।

---

चलन्तः अलकाः चूर्णकुन्तलाः यस्य तथोक्तं । व्यक्तताटङ्करत्नं प्रकाशितकर्णालङ्कार-रत्नं । मुक्ताचूर्णेन स्फुरिततिलकं व्यक्ततिलकं । वक्त्रं मुखं उत्तानयन्त्य ऊर्ध्वंकुर्वत्यः। जातकौतूहलाः । कुवलयदृशः स्त्रियः मधुरं विरुतं शब्दः यस्य तं त्वां मालावत् दीर्घैः अपाङ्गैः कटाक्षैः मानयिष्यन्ति पूजयिष्यन्ति ॥ ४८

तत्र पाण्ड्यदेशे वृषभाद्रिर्वर्तते तत्समीपं गत्वा नमस्कुर्वित्याह—नित्येति ॥ यस्य वृषभाद्रेः उत्सङ्गे तटे बलिविजयिनः महाबलिं जितवतः तस्य श्रुतिप्रसिद्धस्य त्रिविक्रमस्य मञ्जीरेण नूपुरेण वान्तं उद्गीर्णं दिव्यं पाथः देवगङ्गाजलं पशुपतेः रुद्रस्य जटायाः स्पर्शेन सम्बन्धेन हीनं रहितं विभाति प्रकाशते (कवेः स्वमत-समयेन रुद्रसङ्गसहितात् गङ्गाजलात् तद्रहितस्यास्य तीर्थस्याधिक्यमभिमतंदर्शितं) सुन्दराख्यस्य सुन्दरराजइति नामधेयवतः विष्णोः नित्यं आवासं आवासस्थानभूतं (आश्रितानां) भागधेयं भाग्यभूतं वृषभं तदाख्यं अचलं अद्रिं सपदि शीघ्रं प्रत्या-सीदन् समीपतया गच्छन् विनतः विनययुक्तश्च सन् नतः प्रणतः स्याः भव ॥ ४९

ईशादिति ॥ ईशात् रुद्रात् अस्त्राणि आग्नेयादीनि अधिगतवतां (तपसा) प्राप्तवतां क्षत्रियाणां प्रभावात् कारायां कारागृहे वासस्य स्मरणात् चकितैः भीतैः (पाण्ड्यराजाः मेघान् शृङ्खलया निबध्य स्वराज्ये सुभिक्षं कृतवन्तइति अगस्त्य-संहितायां प्रसिद्धं) पयोदैः मेघैः सिक्तसस्यान् आर्द्रीकृतकलमान् अलकया कुबे-

पश्यन्यायाः परमलकया स्पर्धमानैरजस्रं
पुण्यावासैः पुरजनपदैर्मण्डितान्पाण्ड्यदेशान् ॥ ५०

मुक्ताजालैर्जनितपुळिनां शुक्तिसन्तानमुक्तैः
तारापूर्णं दिवमिव ततस्ताम्रपर्णीं भजेथाः ।
प्रत्यासत्त्या नियतविशदं पीतसिन्धोर्महर्षेः
पानीयन्ते परिणमयिता तत्र मुक्तामयत्वम् ॥ ५१

तस्यास्स्वैरं सरसिजमुखास्वादसम्प्रीतचेता-
श्शीतीभूतस्तरळलहरीबाहुसंश्लेषणेन ।
अध्यासीनः पुलिनमनिलैर्वीजितश्चन्दनाद्रे-
श्श्रान्तिं शान्तिं गमयतु भवान्सागरं लङ्घयिष्यन् ॥ ५२

---

रनगर्यासह परं भृशं स्पर्धमानैः कलहं कुर्वाणैः पुण्यावासैः पुण्यक्षेत्रभूतैः पुरैः जनपदैश्च मण्डितान् भूषितान् पाण्ड्यदेशान् पश्यन् सन् यायाः गच्छेः ॥ ५०

मुक्तेति ॥ ततः शुक्तीनां मुक्तास्फोटानां सन्तानेभ्यः समूहेभ्यः मुक्तैः । मुक्तानां मौक्तिकानां जालैः समूहैः जनितपुलिनां उत्पादितसैकतां । अतएव तारापूर्णां नक्षत्रपूरितां दिवं आकाशमिव स्थितां । ताम्रपर्णीं तदाख्यनदीं । भजेथाः भजस्व । तत्र । पीतः सिन्धुः समुद्रः येन तस्य । महर्षेः अगस्त्यस्य प्रत्यासत्त्या समीपेवस्थानात् नियतं नियमेन विशदं निर्मलं पानीयं जलं ते तव मुक्तामयत्वं मुक्तरोगत्वं (मुक्ताफलरूपत्वमितिध्वन्यते) परिणमयिता परिणामयिष्यति ॥ ५१

तस्या इति ॥ तस्याः नद्याः स्वैरं यथेच्छं सरसिजानामेव मुखानां आस्वादेन चुम्बनेन सम्यक्प्रीतं चेतः मनः यस्य तथोक्तः तरलाभिः चञ्चलाभिः लहरीभिः तरङ्गैरेव बाहुभिः संश्लेषणेन आलिङ्गनेन शीतीभूतः शीततां प्राप्तः । पुलिनं अध्यासीनः पुलिने स्थितः । चन्दनाद्रेः मलयाचलस्य अनिलैः वायुभिः वीजितः सेवितः भवान् त्वं सागरं लङ्घयिष्यन् तरिष्यन् श्रान्तिं अध्वगमनायासं शान्तिं गमयतु शमय ॥ ५२

सव्यं तस्याः कियदिव गतश्श्यामताळीतमालां
त्वत्प्रायाणां तरुणवयसां चेतसो नन्दयित्रीम् ।
वेलामब्धेर्विविधलहरीदत्तमुक्ताभिरामां
द्रक्ष्यस्यारात् द्विगुणपुलिनां केतकीनां परागैः ॥ ५३

स्थित्वा तत्र क्षणमुभयतश्शैलशृङ्गावतीर्णै-
स्स्रोतोभेदैरधिगतगुणं चारुविष्फारघोषैः ।
लक्ष्यीकुर्वन्दशमुखपुरीं सौम्य पत्रप्रकृष्टो
वेलाचापं शर इव सखे वेगतस्त्वं व्यतीयाः ॥ ५४

दावासक्तं वनमिव नभस्सन्ध्ययेवानुविद्धं
सिन्दूराङ्कं द्विपमिव हरिं स्वाम्बरेणेव जुष्टम् ।

---

सव्यमिति ॥ तस्याः नद्याः सव्यं वामं कूलं तीरं कियदिव गतः त्वं श्यामाः ताल्यः तमालाश्च यस्यान्तथाभूतां । त्वत्प्रायाणां त्वादृशानां तरुणानां यूनां वयसां पक्षिणां चेतसः नन्दयित्रीं सन्तोषयित्रीं विविधाभिः लहरीभिस्तरङ्गैः दत्ताभिः मुक्ताभिः मुक्ताफलैः अभिरामां रम्यां । केतकीनां परागैः धूलिभिः द्विगुणपुलिनां द्विगुणीकृतसैकतां अब्धेः समुद्रस्य वेलां तीरं आरात्समीपे द्रक्ष्यसि ॥ ५३

स्थित्वेति ॥ हे सौम्य तत्र क्षणं स्थित्वा उभयतः पार्श्वद्वये शैलानां शृङ्गेभ्यः शिखरेभ्यः अवतीर्णैः चारुः रम्यः विष्फारः धनुषांध्वनिरिव घोषः येषान्तथोक्तैः । स्रोतसां प्रवाहाणां भेदैः अधिगतगुणं प्राप्तमौर्वीकं वेलाचापं चापवत् स्थितां वेलां शरइव पत्राभ्यां पक्षाभ्यां प्रकृष्टः उत्कृष्टः त्वं दशमुखस्य रावणस्य पुरीं लक्ष्यीकुर्वन् शरव्य कुर्वन् वेगतः शीघ्रं व्यतीयाः लङ्घय । शरपक्षे योजनं स्पष्टम् ॥ ५४

दावेति ॥ हे सखे विद्रुमारण्यस्य प्रवालवनस्य योगात् सम्बन्धात् पयोधिं समुद्रं दावेन दावाग्निना आसक्तं युक्तं वनमिव सन्ध्यया अनुविद्धं युक्तं नभः आकाशमिव सिन्दूराङ्कं कुङ्कुमलाञ्छितं द्विपं गजमिव स्वस्य अम्बरेण पीतवस्त्रेण

विद्युद्भिन्नं घनमिव सखे विद्रुमारण्ययोगा-
द्देहेनैकं मिथुनमिव च द्रक्ष्यसि त्वं पयोधिम् ॥ ५५

अस्मत्पूर्वैस्सुरपतिहृतं द्रष्टुकामैस्तुरङ्गं
भित्वा क्षोणीमगणितबलैस्सागरो वर्धितात्मा ।
सत्कारार्थं तव यदि गिरीनादिशेद्गुप्तपक्षा
न्नश्रान्तोऽपि प्रणयमुचितं नैव बन्धोर्विहन्याः ॥ ५६

तत्रासीनः क्वचन सरसि स्मेरहेमारविन्दे
लब्धास्वादो मधुभिरमितैस्संविनीताध्वखेदः ।
द्रक्ष्यस्यग्रे लघुतरगतिश्शेषमुल्लङ्घ्य सिन्धो-
स्तोयाघातान्मसृणितशिलारम्यवेलं सुवेलम् ॥ ५७

---

जुष्टं परिवीतं हरिं विष्णुमिव विद्युता तडिता भिन्नं मिश्रं घनं मेघमिव देहेन नीलपीतदेहभागद्वयेन युक्तं एकं मिथुनं अर्धनारीश्वरात्मकद्वन्द्वमिव लक्ष्मीनारायणद्वन्द्वमिव वा द्रक्ष्यसि ॥ ५५

अस्मदिति ॥ सुरपतिना इन्द्रेण हृतं अश्वं । द्रष्टुकामैः । अगणितं असङ्ख्यातं बलं येषान्तैः अस्मत्पूर्वैः सगरपुत्रैः क्षोणीं भूमिं भित्वा वर्धितः आत्मा शरीरं यस्य सः । सागरः समुद्रः तव सत्कारार्थं गुप्तपक्षान् पर्वतान् आदिशेत् आज्ञापयेद्यदि अश्रान्तोपि त्वं बन्धोः समुद्रस्य उचितं युक्तं प्रणयं स्नेहं नैव विहन्याः विघ्नितं माकुरु ॥ ५६

तत्रेति ॥ तत्र समुद्रप्रेरितपर्वतेषु । स्मेराणि विकसितानि हेमारविन्दानि स्वर्णपद्मानि यस्मिंस्तस्मिन् । क्वचन कुत्रचित् सरसि आसीनः स्थितः अमितैः मधुभिः । लब्धास्वादः । सम्यग्विनीत परिहृतः अध्वखेदः मार्गश्रमः येन तथोक्तः लघुतरगतिः शीघ्रगमनः सिन्धोः शेषं उल्लङ्घ्य तोयस्य जलस्य आघातात् ताडनात् मसृणिताभिः श्लक्ष्णीकृताभिः शिलाभिः रम्यवेलं सुन्दरकूलं सुवेलं तदाख्यगिरिं । अग्रे द्रक्ष्यसि ॥ ५७

यस्यासन्ने पयसि जलधेस्त्वत्प्रतिच्छन्दचन्द्राः
पक्षच्छेदक्षरितरुधिरस्तोमसन्दर्शनीयाः ।
वीचीप्राप्तेर्विषमितरुचो मौक्तिकैस्तारकाभै-
स्सन्ध्यामन्यां नियतमवनौ दर्शयन्ति प्रवाळाः ॥ ५८

यत्रारण्यं वरुणवसतेर्वीचिवेगापनीतैः
मुक्तारत्नस्तबकशबलैर्विद्रुमैरुत्प्रवाळम् ।
रक्षोभीतैस्स्वयमनिमिषैराहृतस्थापितानां
मन्दाराणां मधुपरिमळैर्वासितं मौळिदघ्नैः ॥ ५९

तस्मिन्दृश्या भवति भवतश्चारुसौधावदाता
लङ्का सिन्धोर्महितपुळिने राजहंसीव लीना ।

---

यस्येति ॥ यस्य सुवेलस्य आसन्ने समीपस्थे जलधेः पयसि जले तव प्रतिच्छन्दः प्रतिबिम्बएव चन्द्रः येषु तथोक्ताः पक्षच्छेदेन क्षरितानां स्रुतानां रुधिराणां रक्तानां स्तोमवत् समूहवत् सम्यग्दर्शनीयाः । वीचीनां तरङ्गाणां प्राप्तेः प्रकर्षेणोत्क्षेपणात् विषमितरुचः अधिककान्तयः प्रवालाः विद्रुमाः तारकाभैः नक्षत्रसदृशैः मौक्तिकैः अवनौ नियतं निश्चितं अन्यां सन्ध्यां दर्शयन्ति ॥ ५८

यत्रेति ॥ यत्र सुवेले अरण्यं वरुणवसतेः समुद्रस्य वीचिवेगेन अपनीतैः अपहृतैः मुक्तारत्नानां मौक्तिकश्रेष्ठानां स्तबकैः कलिकाभिः शबलैर्नानावर्णैः । विद्रुमैः प्रवालैः उत्प्रवालं उद्गतकिसलयं रक्षसः रावणात् भीतैः अनिमिषैर्देवैः आहृतानां स्थापितानाञ्च मन्दाराणां मौलिदघ्नैः चूडाप्रमाणैः अत्यन्तमधिकैरित्यर्थः मधुपरिमळैः । वासितम् ॥ ५९

तस्मिन्निति ॥ ततः तस्मिन् सुवेले चारुसौधैः रम्यप्रासादैः अवदाता शुभ्रा अतएव सिन्धोः समुद्रस्य महिते पूज्ये पुलिने सैकते राजहंसीव लीना लग्ना लङ्का।

त्वामायान्तं पवनतरलैर्या पताकापदेशैः

पक्षैरभ्युज्जिगमिषुरिव स्थास्यति श्राव्यनादा ॥ ६०

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु

हंससन्देशे प्रथमाश्वासः ।

---

भवतः तव दृश्या । श्राव्यनादा या लङ्का आयान्तमागच्छन्तं त्वां पवनेन तरलैश्चञ्चलैः पताकाः वैजयन्त्यइति अपदेशः व्याजः येषान्तैः पक्षैः गरुद्भिः अभ्युज्जिगमिषुः अभ्युद्गन्तुमिच्छुरिव स्थास्यति वर्तिष्यते सा दृश्येति पूर्वेणान्वयः ॥ ६०

॥ इति हंससन्देशव्याख्यायां प्रथमाश्वासः समाप्तः ॥

---

## ॥ द्वितीयाश्वासः ॥

लीलाखेलं ललितगमनाश्चारुनादं सशिञ्जाः
भल्लाक्षं त्वां स्मरशरदृशो गौरमापाण्डुराङ्ग्यः ।
मुग्धालापं मधुरवचसो मानसार्हं मनोज्ञाः
यत्रानीतास्सुरयुवतयो रञ्जयेयुस्समक्षम् ॥ १

उग्रैश्शापैरुपहतिभिया रक्षसा दूरमुक्ताः
दग्धुं योग्या हुतवहमपि त्वत्प्रियावर्णशुद्धाः ।
उत्पश्यन्त्यो जनकतनयातेजसैव स्वरक्षां
रोधं यस्यामनुविदधते लोकपालावरोधाः ॥ २

लीलेति ॥ यत्र लङ्कायां आनीताः ललितं रम्यं गमनं यासां तथोक्ताः सशिञ्जाः भूषणध्वनिसहिताः स्मरशरवत् पद्मवत् दृशौ नेत्रे यासान्तथोक्ताः आपाण्डुराङ्ग्यः विरहधवलगात्र्यः मधुरवचसः स्वादुभाषणाः । मनोज्ञाः । सुरयुवतयः लीलया खेलं सुभगं चारुनादं रम्यध्वनिं भल्लाक्षं राजहंसं गौरं श्वेतं मुग्धालापं सुन्दरभाषणं मानसार्हं मानससरोयोग्यं मनोभोग्यं वा त्वां समक्षं प्रत्यक्षतः रञ्जयेयुः रञ्जयिष्यन्ति । परस्परसाम्यात्त्वाम्मानयिष्यन्तीतिभावः । सा नगरी दृश्येति पूर्वेणान्वयः ॥ १

उग्रैरिति ॥ उग्रैः शापैः उपहतिभिया दोषभीत्या रक्षसा रावणेन दूरमुक्ताः हुतवहं अग्निमपि दग्धुं योग्याः तव प्रियायाः हंस्याइव शुद्धः (कान्तविरहात्) धवलः वर्णः येषान्तथोक्ताः । 'आहिताग्न्यादित्वात्परनिपातः' । जनकतनयायाः सीतायाः तेजसैव पातिव्रत्यशक्त्यैव स्वेषां रक्षां रक्षणं उत्पश्यन्तः उत्प्रेक्षमाणाः लोकपालानां दिक्पालानां अवरोधाः अन्तः पुरस्त्रियः यस्यां लङ्कायां रोधं उपरोधं अनुविदधते अनुकुर्वते ॥ २

अध्यासीना बहुमणिमयं तुङ्गशृङ्गं सुवेलं
दिक्पालेषु प्रथितयशसा रक्षसा रक्ष्यमाणा ।
अग्रे मेरोरमरनगरीं या परिष्कारभूम्ना
त्वाहूयेव ध्वजपटमयानग्रहस्तान्धुनोति ॥ ३

काले यस्यां व्यपगतघने त्वद्विहारोचितेऽस्मिन्
चन्द्रालोकैर्विलुलितधियां शर्वरीगर्वहासैः ।
स्वर्गस्त्रीणां विरहजनितं बाष्पमुद्वेलयन्त्यो
निःष्यन्दन्ते सलिलकणिकाश्चन्द्रकान्तस्थलीनाम् ॥ ४

भासा तादृक्परिणतिजुषा मैथिलीशोकवह्ने-
र्भस्मीभूतां पवनतनयस्नेहिना पावकेन ।

---

अधीति ॥ बहुमणिमयं अनेकरत्नप्रचुरं तुङ्गशृङ्गं उन्नतशिखरं सुवेलं सुवेल-पर्वतं अध्यासीना अधिष्ठिता तत्र स्थितेत्यर्थः । दिक्पालेषु प्रथितं प्रसिद्धं यशः यस्य तेन रक्षसा रावणेन रक्ष्यमाणा परिष्कारस्य अलङ्कारस्य भूम्ना आधिक्येन (युक्ताच) या लङ्का सुमेरोः मेरुपर्वतस्य अग्रे उपरि (स्थितां) अमरनगरीं अमरावतीं आहूय स्पर्धांकृत्वा ध्वजपटमयान् पताकारूपान् अग्रहस्तान् धुनोतीव कम्पयतीव ॥ ३

काल इति ॥ यस्यां लङ्कायां व्यपगतघने अपगतमेघे तव विहारस्य उचिते योग्ये अस्मिन् काले शरत्काले शर्वर्या रात्र्या गर्वेण (कृतैः) हासैरिवस्थितैः चन्द्रस्य आलोकैः प्रकाशैः विलुलितधियां क्षुभितचित्तानां स्वर्गस्त्रीणां विरहेण जनितं बाष्पं अश्रु उद्वेलयन्त्यः अधिकंकुर्वत्यः चन्द्रकान्तस्थलीनां चन्द्रकान्तरत्न-शिलाप्रदेशानां सलिलकणिकाः जलबिन्दवः निःष्यन्दन्ते स्रवन्ति ॥ ४

भासेति ॥ मैथिल्याः सीतायाः शोकवह्नेः दुःखाग्नेः तादृशीं यथार्थाग्नि-रूपां परिणतिं परिणामं जुषते गच्छतीति तथोक्तस्तेन पवनतनयस्नेहिना हनुमत्स-खेन पावकेन अग्निना भासा तेजसा भस्मीभूतां भस्मतयापरिणतां तां लङ्कां अन्तः

अन्तस्त्रासादवहितधियस्संविधास्यन्त्यवश्यं
प्रत्यादिष्टप्रथमरचनं विश्वकर्मादयस्ताम् ॥ ५

मध्ये तस्या निशिचरपतेस्सद्म रुद्धान्तरिक्षं
युग्मं नेयैर्दिवि सुमनसां सेव्यमानं विमानैः ।
कारागारं विबुधसुदृशां वीक्षमाणो विचित्रं
शोकप्रीतिव्यतिकरवर्तीं वक्ष्यसे चित्तवृत्तिम् ॥ ६

ईषत्कोपाच्चकितपवनामिन्दुसन्दिग्धसूर्यां
नित्योदारामृतुभिरखिलैर्निष्कुटे वृक्षवाटीं ।
सीताशोकज्वलनसहजैस्तत्र दीप्तामशोकै-
रापद्येथाः प्रथमलुलितामाञ्जनेयप्रचारैः ॥ ७

---

मनसि त्रासात् रावणभीत्या अवहितधियः सावधानमतयः विश्वकर्मादयः प्रत्या-दिष्टा तिरस्कृता प्रथमरचना पूर्वसृष्टिर्यस्मिन्कर्मणितद्यथाभवतितथा संविधा-स्यन्ति सम्यक्करिष्यन्ति ॥ ५

मध्य इति ॥ तस्याः लङ्कायाः मध्ये रुद्धान्तरिक्षं अवरुद्धगमनं युग्मं मन्दोदरीरावणात्मकं द्वन्द्वं दिवि स्वर्गे नेयैः नेतुं अर्हैः सुमनसां देवानां विमानैः सेव्यमानं विबुधसुदृशां देवस्त्रीणां कारागारं बन्दीगृहं विचित्रं निशिचरपतेः राव-णस्य सद्म गृहं वीक्षमाणः पश्यन् त्वं शोकप्रीत्योः व्यतिकरः सम्पर्कः तद्वर्तीं चित्त-वृत्तिं वक्ष्यसे धारयिष्यसि ॥ ६

ईषादिति ॥ तत्र रावणगृहे ईषत्कोपात् (रावणस्य) स्वल्पकोपात् चकितः भीतः पवनः यस्यान्तां इन्दुः (निस्तेजस्कतया) चन्द्रः इति सन्दिग्धः शङ्कितः सूर्यः यस्यान्तां अखिलैः समस्तैः ऋतुभिः वसन्ताद्यैः नित्यं उदारां समृद्धां सीतायाः शोकज्वलनेन दुःखाग्निना सहजैः सहोत्पन्नैः मित्रैरित्यर्थः । अशोकैः तदाख्यवृक्षैः दीप्तां विराजमानां आञ्जनेयस्य हनुमतः प्रचारैः सञ्चारैः प्रथमं लुलितां मर्दितां निष्कुटे गृहोद्याने वृक्षवाटीं तरुपङ्क्तिं आपद्येथाः भजस्व ॥ ७

तस्यामन्यैर्वियति विहगैस्सार्धमानन्दनिघ्नै-
स्स्थाने स्थाने निहितनयनो वर्तयन्मण्डलानि ।
द्रक्ष्यस्येकां जनकदुहितुस्सौम्य दुर्जातबन्धुं
न्यस्ताकल्पां क्वचन विटपे शिंशुपां सान्द्रशाखाम् ॥ ८

मूले तस्याः किमपि सवनक्षेत्रसंस्कारजातं
यत्र क्वापि स्थितमपि सखे त्रासहीनं महिम्ना ।
काले तस्मिन्कथमपि मया वीर्यशुल्केन लब्धं
दृश्यं तत्ते दिनकरकुलद्योतकं दिव्यरत्नम् ॥ ९

---

तस्यामिति ॥ हे सौम्य हंस तस्यां वृक्षवाटिकायां आनन्दनिघ्नैः सन्तोषपरवशैः अन्यैः विहगैः पक्षिभिः सार्धं सह वियति आकाशे मण्डलानि परिभ्रमणानि वर्तयन् कुर्वन् स्थानेस्थाने निहिते न्यस्ते नयने नेत्रे येन तथोक्तश्च सन् जनकदुहितुः सीतायाः दुर्जाते व्यसने बन्धुं क्वचन विटपे एकस्यां शाखायां न्यस्ताकल्पां विनिहितभूषणां सान्द्रशाखां निबिडस्कन्धां एकां अद्वितीयां शिंशुपाख्यवृक्षं द्रक्ष्यसि ॥ ८

तस्याः मूले सीतारत्नं तव दृश्यमित्याह—मूल इति ॥ भोसखे तस्याः शिंशुपायाः मूले किमपि अनिर्वचनीयं सवनक्षेत्रस्य यागभूमेः संस्कारेण हलेन दारणेन जातं उत्पन्नं यत्र क्वापि स्थितमपि महिम्ना माहात्म्येन प्रकाशेन च त्रासेन भयेन मणिदोषेण च हीनं रहितं मया तस्मिन् काले यागसमये कथमपि प्रयासतः वीर्यशुल्केन शौर्यरूपणेन लब्धं दिनकरकुलस्य सूर्यवंशस्य द्योतकं प्रकाशकं तत् उपनिषत्प्रसिद्धं दिविभवं दिव्यं श्रेष्ठं रत्नं सीतारूपस्त्रीरत्नं ते तव दृश्यं द्रष्टुं योग्यं भवति ॥ ९

सा मे दृष्टिश्शफरनयना सन्नतभ्रूस्सुकेशी
तन्वी तुङ्गस्तनभरनता तप्तजाम्बूनदाभा ।
बाला युष्मत्प्रतिमगमना वेदिमध्या वराङ्गी
शृङ्गाराख्यं निधिमधिगता श्रेयसी देवतेव ॥ १०

सा ते यावन्नयनपदवीं याति मोहालसा वा
सन्देशं वा मदुपगतये श्रावयन्ती शकुन्तान् ।
अत्यासन्नप्रियवचनतां सूचयद्भिर्निमित्तै-
रेतामश्रुस्थगितनयनं वीक्षमाणा दिशं वा ॥ ११

आकल्पान्वा सविधविहितानालपन्ती विमोहा-
दङ्गस्पर्शो रघुकुलपतेस्स्मर्यते वा नवेति ।

---

सीतां वर्णयति— सेति ॥ शफरनयना मीनाक्षी सम्यङ्नतभ्रूः सुकेशी शोभनकेशा तन्वी कृशा तुङ्गयोरुन्नतयोः स्तनयोर्भरेण नता नम्रा तप्तस्य जाम्बूनदस्य कनकस्य आभेव आभा शोभा यस्यास्तथोक्ता बाला तरुणी युष्मत्प्रतिमं युष्मत्सदृशं गमनं यस्यास्तथोक्ता वेद्यां गवेदेर्मध्यमिवमध्यंयस्यास्सा वराङ्गी उत्कृष्टावयवा अतएव शृङ्गाराख्यं निधिं अधिगता प्राप्ता श्रेयसी अतिशयेन प्रशस्या देवतेव स्थिता सा सीता मे मम दृष्टिर्नयनं तद्वत्प्रेमपात्रमिति भावः ॥ १०

सीताया अवस्थां वर्णयति—सेति ॥ सा सीता ते तव यावत् नयनयोः पदवीं मार्गं विषयमिति यावत् याति प्राप्नोति (तावत्कालं) मोहेन मूर्छया अलसाश्रान्तावा मम उपगतये समीपागमनाय शकुन्तान् पक्षिणः सन्देशं श्रावयन्ती वा अत्यासन्नं प्रियस्य वचनं यस्यास्तस्याभावस्तत्ता तां सूचयद्भिः प्रकाशयद्भिः निमित्तैश्शकुनैः अश्रुभिः स्थगिते आच्छादिते नयने यस्मिन्कर्मणि तद्यथा भवति तथा एतां दिशं वीक्षमाणावा (स्यात्) ॥ ११

आकल्पानिति ॥ सविधे समीपे निहितान् निक्षिप्तान् आकल्पान् भूषणानि प्रति रघुकुलपतेः अङ्गस्पर्शः स्मर्यतेवा नवेति विमोहात् आलपन्ती भाषमाणा

ध्यायन्ती वा चिरविरहितानेकशय्याविहारान्
तस्या नूनं नियतिजनिता तादृशी कालयात्रा ॥ १२

शुद्धामिन्दोश्श्वपचभवने कौमुदीं विस्फुरन्ती-
मानीतां वा विषतरुवने पारिजातस्य शाखाम् ।
सूक्तिं रम्यां खलपरिसरे सत्कवेः कीर्त्यमानां
मन्ये दीनां निशिचरगृहे मैथिलस्यात्मजाताम् ॥ १३

वर्षाकीर्णामिव कमलिनीं व्याहतार्थामिवोक्तिं
पङ्काश्लिष्टामिव बिसलतां पत्यपेतामिवेभीं ।
मेघच्छन्नामिव शशिकलां विघ्नरुद्धामिवाशां
व्याघ्रोपेतामिव मृगवधूं भूतले ज्यामिवास्ताम् ॥ १४

---

चिरद्विरहितान् एकस्यां शय्यायां तल्पे विहारान् क्रीडाः ध्यायन्तीवा (सासीता-स्यात्) तस्याः सीतायाः तादृशी कालयात्रा कालस्थितिः नियतेर्दैवात् जनिता उत्पन्ना नूनम् ॥ १२

शुद्धामिति ॥ निशिचरस्य रावणस्य गृहे दीनां विषण्णां मैथिलस्यात्मजां सीतां श्वपचस्य श्वपाकस्य भवने गृहे विस्फुरन्तीं प्रकाशमानां शुद्धां इन्दोः चन्द्रस्य कौमुदीं वा ज्योत्स्नामिव (वा इवार्थे) विषतरुवने आनीतां पारिजातस्य शाखांवा लतामिव खलपरिसरे दुष्टसमीपे कीर्त्यमानां रम्यां सत्कवेः सूक्तिंवा काव्यमिवच मन्ये ॥ १३

वर्षेति ॥ वर्षेण वृष्ट्या आकीर्णां कमलिनीं पद्मिनीमिव व्याहतार्थां परस्परविरुद्धार्थां उक्तिं वाचमिव पङ्कैः कर्दमैः आश्लिष्टां आलिप्तां बिसलतां मृणालीमिव पत्यपेतां पतिवियुक्तां इभीं करिणीमिव मेघेन च्छन्नामावृतां शशिनश्चन्द्रस्य कलामिव विघ्नेन अन्तरायेण रुद्धां प्रतिहतां आशां वाञ्छामिव व्याघ्रेण उपेतां सहितां शशवधूमिव वीतलज्जां कुलाङ्गनालङ्कारभूतलज्जारहितां इष्टां आर्यामिवच (मन्ये) ॥ १४

स्मृत्वा पूर्वं स्मरशरभये मत्परिष्वङ्गरक्षा-
माश्लिष्यन्तीमलसवलितैरङ्गकैर्मातरं स्वाम् ।
आकल्पेऽपि श्रममधिगतैरङ्गरागेऽपि खिन्नै-
रक्षाम्यद्भिः स्मृतिमपि मुहुस्सौकुमार्यातिरेकात् ॥ १५

भूयोभूयः करसरसिजे न्यस्य रोमाञ्चिताङ्गीं
मौळौ चूडामणिविरहिते निर्विशन्तीं निधाय ।
अन्तस्तापादधिगतरुजोरादरादर्पयन्तीं
पर्यायेण स्तनकलशयोरङ्गुळीयं मदीयम् ॥ १६

अम्बातुल्या सुचरितफलं दिव्यमालेपनं प्राक्
अङ्गेष्वस्याः स्थिरमनुगुणं यद्वितेनेऽनसूया ।

---

स्मृत्वेति ॥ पूर्वं स्मरशरभये मन्मथबाणभयेसति मन्मथविकारेसतीत्यर्थः मत्परिष्वङ्गं मदालिङ्गनमेव रक्षां स्मृत्वा अलसेन आलस्येन अशक्त्या वलितैर्मन्दंचलद्भिः आकल्पे भूषणधारणेपि श्रमं अधिगतैः प्राप्तैः अङ्गरागे चन्दनादिलेपनेऽपि खिन्नैः दुःखितैः सौकुमार्यस्य मृदुत्वस्य अतिरेकात् अतिशयात् मुहुः स्मृतिमपि अक्षाम्यद्भिः असहमानैः अङ्गकैः अनुकम्प्यावयवैः स्वां मातरं भूमिं आश्लिष्यन्तीं भूमौ पतित्वा मूर्छितामित्यर्थः । कुलकमुत्तरश्लोकैस्सह ॥ १५

भूय इति ॥ भूयोभूयः पुनःपुनः मदीयं अङ्गुलीयं ऊर्मिकां करसरसिजे पाणिपद्मे न्यस्य निधाय अतएव रोमाञ्चिताङ्गीं पुलकिताङ्गीं चूडामणिविरहिते मौळौ शिरसि निधाय निर्विशन्तीं सुखमनुभवन्तीं अन्तः मनसि (विरहजन्यात्) तापात् अधिगतरुजोः प्राप्तरोगयोः स्तनकलशयोः कुम्भसदृशकुचयोः विपर्ययेण अनुक्रमेण आदरात् स्नेहात् अर्पयन्तीं निदधतीं ॥ १६

अम्बेति ॥ अम्बया मात्रा तुल्या सदृशी अनसूया अत्रिपत्नी सुचरितस्य स्वतपसः फलं फलभूतं दिव्यं अनुगुणं अनुकूलं स्थिरं दीर्घकालस्थायि यत् आले-

धाराकारैः स्तनकलशयोरापतद्भिस्समन्ता-
त्सन्तापोष्णैस्तदनुबहुळैरश्रुभिः क्षाळयन्तीम् ॥ १७

अग्राह्यत्वाद्विषमयमितं केशहस्तं मया प्राक्
आबिभ्राणां तनुपरिमळश्रद्धयेवावकीर्णम् ।
अर्चाहेतोर्भुवि रतिपतेरप्सरोभिर्विमुक्ताम्
अन्वग्यातामिव सुरतरोर्मञ्जरीं चञ्चरीकैः ॥ १८

आनीतं यत्त्वरितमचलादुत्तरीयं प्लवङ्गै-
रस्याकारैस्सदृशमभितस्त्वत्प्रियारूपचिह्नम् ।
बालादित्यद्युतिसहचरं चारुवासो वसानां
सन्ध्यारागव्यतिकरवतीं चन्द्रलेखामिवान्याम् ॥ १९

---

पनं अङ्गरागं प्राक् पूर्वं अस्याः सीतायाः अङ्गेषु वितेने चकार । धाराकारैः वर्षधारासदृशैः स्तनकलशयोः समन्तात् परितः आपतद्भिः सन्तापेन उष्णैः बहुलैः अधिकैः अश्रुभिः तदनु अनन्तरं तत् आलेपनं क्षालयन्तीं परिमार्जयन्तीम् ॥ १७

**अग्राह्यत्वादिति** ॥ प्राक् विरहात्पूर्वं मया अग्राह्यत्वात् बाहुल्येनहेतुना ग्रहीतुमशक्यत्वात् विषमं असमीचीनंयथातथा यमितं बद्धं केशहस्तं कचसमूहं तनोः शरीरस्य परिमळे श्रद्धयेव आशयेव अवकीर्णं आबिभ्राणां धारयन्तीं अतएव भुवि रतिपतेर्मन्मथस्य अर्चाहेतोः पूजार्थं अप्सरोभिः विमुक्तां चञ्चरीकैः भ्रमरैः अन्वक् अनुसृत्य पश्चात् यातां सुरतरोः पारिजातस्य मञ्जरीं वल्लरीमिवस्थिताम् ॥१८

**आनीतमिति** ॥ प्लवङ्गैः कपिभिः अचलान्मतङ्गपर्वतात् यत् उत्तरीयं त्वरितं शीघ्रं आनीतं । अभितः परितः तव प्रियायाः राजहंस्याः रूपं आकृतिः चिह्नं लाञ्छनं यस्य तथोक्तं अस्य एतदुत्तरीयस्य आकारैः सदृशं बालादित्यस्य द्युतेः कान्तेः सहचरं समानं चारु रम्यं वासः वस्त्रं उत्तरीययुग्मेऽन्यतरदित्यर्थः । वसानां धारयन्तीं अतएव सन्ध्यारागेण व्यतिकरवतीं मिश्रां अन्यां चन्द्रलेखामिव-स्थिताम् ॥ १९

वक्तुं मार्गं किल वसुमतीं जग्मुषस्तत्पदाब्जात्
मञ्जीरस्य त्वदुपमरुतेर्दक्षिणस्यास्य तुल्यम् ।
अङ्कारूढे चरणकमले मत्करेणोपधेयं
वामं शाखाशिखरनिहितं वीक्ष्य गाढं विषण्णाम् ॥ २०

अङ्गैर्म्लायत्किसलयसमैरुज्झिताकल्पपुष्पैः
गाढाश्लिष्टां वपुषि विमले बिम्बिताभिर्लताभिः ।
सन्तापोष्णश्वसनपरुषच्छायया किञ्चिदूनां
बन्दीभूतां निशिचरगृहे नन्दनस्येव लक्ष्मीम् ॥ २१

चेतोवृत्तिं शमयति बहिस्सार्वभौमे निरोधे
मय्येकस्मिन्प्रणिहितधियं मान्मथेनागमेन ।

---

वक्तुमिति ॥ मार्गं वक्तुं किल वक्तुमिव तस्याः पदाब्जात् वसुमतीं भूमिं अधिजग्मुषः प्राप्तस्य त्वदुपमरुतेः त्वत्सदृशध्वनेः दक्षिणस्य अस्य मञ्जीरस्य नूपुरस्य तुल्यं अङ्कं उत्सङ्गं आरूढे चरणकमले मम करेण उपधेयं भूषयितुं योग्यं शाखाशिखरे निहितं वामं सव्यं मञ्जीरं वीक्ष्य गाढं अत्यन्तं विषण्णां दुःखिताम् ॥

अङ्गैरिति ॥ उज्झिताकल्पपुष्पैः त्यक्तभूषणकुसुमैः त्यक्तभूषणभूतपुष्पैश्च । म्लायत्किसलयसमैः म्लानपल्लवसदृशैः म्लानसमस्तपल्लवैश्च । अङ्गैरवयवैर्युक्तां । विमले वपुषि शरीरे । बिम्ब आसां सञ्जात बिम्बिताः प्रतिबिम्बिताः ताभिः लताभिः । गाढं आश्लिष्टां । सन्तापादुष्णेन श्वसनेन निश्वासवायुना वायुनाच । परुषा या च्छाया कान्तिः तया । किञ्चिदूनां पूर्वावस्थातः न्यूनां अतएव निशिचरस्य रावणस्य गृहे । बन्दीं कारावासं भूतां प्राप्तां । नन्दनस्य स्वर्गोद्यानस्य । लक्ष्मीमिव स्थिताम् ॥ २१

चेत इति ॥ सार्वभौमे सर्वभूमौ विदिते निरोधे इन्द्रियनिग्रहे कर्तरि बहिः बाह्यविषयां चेतसः मनसः वृत्तिं व्यापारं शमयति सति । मयि एकस्मिन्

अभ्यस्यन्तीमनितरजुषो भावनायाः प्रकर्षात्
स्वान्तेनान्तर्विलयमृदुना निर्विकल्पं समाधिम् ॥ २२

शून्या दृष्टिः श्वसितमधिकं मीलितं वक्त्रपद्मं
धाराकारं नयनसलिलं सानुबन्धो विलापः ।
इत्थं दैन्यं किमपि विधिना दुर्निवारेण नीता
सा मे सक्ता तनुतरतनुस्तप्यते नूनमन्तः ॥ २३

दृष्ट्वा तस्यास्त्वमपि करुणां तादृशीं तामवस्थां
शक्ष्यस्यन्तः स्वयमुपनतं शोकवेगं न सोढुम् ।

---

मय्येव प्रणिहितधियं न्यस्तमनसं । अनितरजुषः मामेव भजन्त्याः भावनायाः ध्यानानुवृत्त्याः प्रकर्षात् उत्कर्षात् अन्त अन्तरात्मनि विलयेन आसक्त्या मृदुना स्वान्तेन मनसा निर्विकल्पं निष्कण्टकं समाधिं योगं मान्मथेन कामसम्बन्धिना आगमेन शास्त्रेण अभ्यस्यन्तीं । परिचिन्वतीं । मन्य इति पूर्वेणान्वयः ॥ २२

सीतायास्तादृशीमवस्थां स्मृत्वा मम मनस्तप्यत इत्याह—शून्येति ॥ दृष्टिः शून्या वीक्षणं विषयग्रहणाचतुरं श्वसितं उच्छ्वासः अधिकं वक्त्रपद्मं मीलितं मुकुलितं नयनसलिलं धाराकारं विलापः प्रलापः सानुबन्धः अनुस्यूतः । तनुतरतनुः अत्यन्तकृशशरीरा मे सक्ता प्रीतिमती सा सीता दुर्निवारेण प्रतिरोद्धुमशक्येन विधिना दैवेन इत्थं एवं किमपि दैन्यं दीनत्वं नीता प्रापिता नूनमिति अन्तः मम मनः तप्यते दूयते ॥ २३

रावणव्यतिरिक्ताः सर्वेऽपि तदवस्थां दृष्ट्वा कथं दयां न कुर्वन्तीत्याह—दृष्ट्वेति ॥ त्वमपि तस्याः सीताया करुणां दीनां तादृशीं तामवस्थां दृष्ट्वा अन्तः मनसि स्वयं उपनतं आगतं शोकस्य वेगं सोढुं न शक्ष्यसि समर्थो न भविष्यसि क्रव्यादानां मांसभुजां (राक्षसानां पक्षिणाञ्च मध्ये) दशवदनवत् रावणवत्

क्रव्यादानां दशवदनवत् क्वापि जातावजाताः
नालम्बन्ते कथमिव दयां निर्मलत्वोपपन्नाः ॥ २४

नेदीयस्यामधिगतरसो दीर्घिकायां निकामं
संवेशेन श्रममपनयन् शर्वरीं यापयेथाः ।
इत्थं निद्रासमयमुचितं वीक्ष्य नक्तंचरीणां
प्रत्यूषे त्वं प्रणयमधुरां श्रावयिष्यन्मदुक्तिम् ॥ २५

शीतैरध्वश्रमविनयनैस्सेवितो गन्धवाहै-
स्सुप्तः स्वैरं पुळिनशयने स्वन्तरे चन्द्रपादैः ।
क्रीडागीतैः कमलमुकुले लीयतां षट्पदानां
कार्याकाङ्क्षी कलयतु भवान् राजहंस प्रबोधम् ॥ २६

---

क्वापि जातौ कुत्सितयोनौ अजाताः अनुद्भूताः निर्मलत्वेन उपपन्ना युक्ताः कथमिव दयां नालम्बन्ते नगृह्णन्ति ॥ २४

नेदीयस्यामिति ॥ नेदीयस्यां अत्यन्तसमीपस्थितायां दीर्घिकायां सरसि अधिगतरसः पीतरसः प्राप्तप्रीतिर्वा निकामं भृशं संवेशेन सुखस्थित्या श्रमं अपनयन् अपाकुर्वन् नक्तञ्चरीणां राक्षसीनां उचितं योग्यं निद्रासमयं वीक्ष्य प्रत्यूषे प्रातःकाले प्रणयेन प्रीत्या मधुरां रम्यां मम उक्तिं वाक्यं इत्थं वक्ष्यमाणप्रकारेण श्रावयिष्यन् श्रोत्रविषयंकारयिष्यन् त्वं शर्वरीं रात्रिं यापयेथाः गमय ॥ २५

शीतैरिति ॥ भो राजहंस अध्वश्रमविनयनैः मार्गायासनिवर्तकैः शीतैः गन्धवाहैः वायुभिः सेवितः वीजितः चन्द्रस्य पादैः किरणैः स्वन्तरे शोभनान्तरालयुक्ते पुलिनशयने सैकतरूपतल्पे स्वैरं यथेच्छं सुप्तः कार्याकांक्षी भवान् कमलमुकुले लीयतां लग्नानां षट्पदानां भ्रमराणां क्रीडागीतैः लीलागानैः प्रबोधं कलयतु करोतु ॥ २६

तामारूढश्चलकिसलयां शिंशुपां स्वैकलक्ष्यो
मन्दीकुर्वन्मनसिजधनुर्घोषतीव्रं निनादम् ।
मोहादीषन्मुषितमनसं बोधय प्रेयसीं मे
रम्यामादौ रघुजनकयोर्वर्णयन्वंशकीर्तिम् ॥ २७

पत्युर्देवि प्रणयसचिवं विद्धि दीर्घायुषो मां
जीवातुं ते दधतमनघं तस्य सन्देशमन्तः ।
शूराणां यश्शरदुपगमे वीरपत्नीवराणां
संमानार्हं समयमुचितं सूचयेत्कूजितैस्स्वैः ॥ २८

मत्प्रस्तावप्रवणमथ सा मैथिली मानयेत्त्वां
म्लानं शोकाद्वदनकमलं मन्दमुन्नम्य भीरुः ।

---

**तामिति ॥** चलकिसलयां चञ्चलपल्लवां तां शिंशुपां आरूढः स्वया स्वीयया एकया सीतयैव लक्ष्यः दृश्यः मनसिजस्य मन्मथस्य धनुष घोषवत् तीव्रं गाढं प्रणादं शब्दं मन्दीकुर्वन् अल्पतयाकुर्वन् मोहात् ईषत् किञ्चित् मुषितमनसं अपहृतचित्तां मे प्रेयसीं अत्यन्तप्रियां सीतां आदौ रम्यां रघुजनकयोः वंशकीर्तिं वर्णयन्नसन् बोधय प्रबुद्धांकुरु ॥ २७

**पत्युरिति ॥** भोदेवि यः (हंसः) शरदः शरत्कालस्य उपगमे आगमे वीरपत्नीवराणां शूराणां सम्मानार्हं उचितं युद्धयोग्यं समयं कालं स्वैः स्वीयैः कूजितैः शब्दैः सूचयेत् ज्ञापयेत् तं मां ते तव अनघं निर्दोषं जीवातुं जीवनौषधं तस्य रघुपतेः सन्देशं वाचिकं अन्तः मनसि दधतं धारयन्तं दीर्घायुषः तव पत्युः प्रणयसचिवं सखायं विद्धि जानीहि ॥ २८

**मदिति ॥** अथ भीरुः भीतियुक्ता सा मैथिली मम प्रस्तावे कथायां प्रवणं कृताभिनिवेशं त्वां शोकात् म्लानं ग्लानं वदनकमलं मन्दं शनैः उन्नम्य ऊर्ध्वं कृत्वा अन्तः मनसि तोषात् सन्तोषात् अमृतस्य लहर्या प्रवाहेण लब्धं सब्रह्मचर्यं

अन्तस्तोषादमृतलहरीलब्धसब्रह्मचर्यै-
रम्भोजानामुषसि मिषतामन्तरङ्गैरपाङ्गैः ॥ २९

पश्यन्ती सा रघुपतिवधूस्त्वामशेषावदातं
प्रत्याश्वासादधिगतरुचिः प्राक्तनीवेन्दुलेखा ।
मत्सन्देशे तदनु सुमुखी सावधाना भवित्री
किं न स्त्रीणां जनयति मुदं कान्तवार्तागमोऽपि ॥ ३०

पश्चादेवं कथय भवतीभागधेयेन जीवन्
कल्याणीं त्वां कुशलमनघः कोसलेन्द्रोऽनुयुङ्क्ते ।
येषु श्रेयो भवति नियतं तानि सर्वाणि सन्तो
लक्ष्म्या देव्यास्तव च भुवने लक्षणान्यामनन्ति ॥ ३१

---

समानव्रतं यैस्तथोक्तैः उषसि प्रातः मिषतां विकसतां अम्भोजानां पद्मानां अन्तरङ्गैः आप्तैः अपाङ्गैः वीक्षणैः मानयेत् पूजयेत् ॥ २९

पश्यन्तीति ॥ अशेषतः अन्तर्बहिः अवदातं शुद्धं त्वां पश्यन्ती रघुपते र्दशरथस्य वधूः स्नुषा सा सीता प्राक्तनी पूर्वपक्षभवा इन्दोश्चन्द्रस्य लेखेव प्रत्याश्वासात् आश्वासनात् अधिगता प्राप्ता रुचिः कान्तिर्यया तथोक्ता सती तदनु सुमुखी प्रसन्नमुखी मम सन्देशे सावधाना जागरूका च भवित्री भविष्यन्ती (भविष्यतीत्यर्थः) तथाहि कान्तस्य प्रियस्य वार्तायाः आगमः आगमनमपि स्त्रीणां मुदं सन्तोषं नजनयतिकिम् ॥ ३०

पश्चादिति ॥ पश्चात् एवं कथय भवत्याः तव भागधेयेन जीवन् अनघः कोसलेन्द्रः रामः कल्याणीं नित्यमङ्गलां त्वां कुशलं अनुयुङ्क्ते पृच्छति सन्तः महान्तः भुवने येषु लक्षणेषु सत्सु नियतं नियमेन श्रेयः शुभं भवति तानि सर्वाणि लक्षणानि देव्या लक्ष्म्याः तवच लक्षणानि आमनन्ति वदन्ति ॥ ३१

यस्या यस्मिन् व्यवधिरभवद्भूषणालेपनादि-
नीतामेनां नियतिविभवादन्तरीपं दवीयः ।
प्रत्यासीदन्निव नयनयोर्वर्त्मनि स्थापयित्वा
स त्वामेवं वदति कुशली देवि सख्या मुखेन ॥ ३२

वेलातीतप्रणयविवशं भावमासेदुषोर्नौ
भोगारम्भे क्षणमिव गता पूर्वमालिङ्गनाद्यैः ।
सम्प्रत्येषा सुतनु शतशः कल्पनासङ्गमैस्तैः
चिन्तादीर्घैरविशकलिता शर्वरी नापयाति ॥ ३३

उद्दामैस्ते कुचकलशयोरूष्मभिर्निर्जितेन
छिद्रं लब्ध्वा विरहसमये तत्क्षणादुन्नतेन ।

---

यस्या इति ॥ भोदेवि (पूर्वं) यस्या (सीतायाः) यस्मिन् (रघुनाथे) भूषणालेपनादिः आभरणधारणचन्दनलेपनादिः व्यवधिः व्यवधानं अभवत् (इदानीं) एवं नियतेर्दैवस्य विभवात् माहात्म्यात् दवीयः दूरतरं अन्तरीपं द्वीपं नीतां (तां) त्वां कुशली रामः प्रत्यासीदन्निव समीपङ्गतइव नयनयोः वर्त्मनि मार्गे त्वां स्थापयित्वा सख्या मुखेन मित्ररूपमन्मुखेन एवं वक्ष्यमाणप्रकारेण वदति ॥ ३२

वेलेति ॥ भोसुतनु शोभनगात्रि वेलां मर्यादां अतीतेन अतिक्रान्तेन प्रणयेन स्नेहेन विवशं परवशं भावं अभिप्रायं आसेदुषोः प्राप्तवतोः नौ आवयोः भोगस्य आरम्भे आलिङ्गनाद्यैः पूर्वं विरहात्पूर्वं क्षणमिव या शर्वरी रजनी गता सम्प्रति अद्य चिन्तया दीर्घैः शतशः अनेकैः तैः तादृशैः कल्पनासङ्गमैः सङ्कल्पकल्पितसम्भोगैः अविशकलिता अशिथिला एषा शर्वरी नापयाति नगच्छति ॥ ३३

उद्दामैरिति ॥ ते तव कुचकलशयोः उद्दामः उत्कटैः ऊष्मभिः औष्ण्यैः निर्जितेन विजितेन विरहसमये छिद्रं अवकाशं लब्ध्वा तत्क्षणात् तदानीमेव उन्न-

कुन्दामोदैस्सुरभितदिशा गन्धवाहेन दैन्यं
सम्प्राप्तोऽहं सह सरसिजैस्त्वन्मुखाम्भोजमित्रैः ॥ ३४

माध्वीदिग्धैर्विरहिवनितास्वादलुब्धैरमोघै-
रावृण्वन्तं कुसुमधनुषश्चित्रपुङ्खैर्दिगन्तान् ।
सीतापार्श्वे न भवतु भवानित्यवोचद्वसन्तं
रामस्त्रासादनमितधनुर्मौलिना सन्नतेन ॥ ३५

पार्श्वे लोलैः परभृतकुलैर्मुक्तकोलाहलानां
मल्लीरेणुस्थगितवपुषां मन्दरं निर्गतानाम् ।
भीतेनाहं भ्रमरपटलीशृङ्खलासङ्कुलानां
मार्गे तिष्ठन्मलयमरुतां वारितो लक्ष्मणेन ॥ ३६

---

तेन कुन्दानां माघ्यपुष्पाणां आमोदैः परिमलैः सुरभितदिशा वासितदिग्भागेन गन्धवाहेन वायुना तव मुखाम्भोजस्य मित्रैः सदृशैः सरसिजैस्सह अहं दैन्यं दीनभावं सम्प्राप्तः प्राप्तोऽस्मि ॥ ३४

माध्वीति ॥ रामः माध्व्या मधुना दिग्धैः लिप्तैः विरहिणीनां वनितानां स्त्रीणां स्वादे भक्षणे लुब्धैः आशावद्भिः अमोघैः अप्रतिहतैः कुसुमधनुषः मन्मथस्य चित्रपुङ्खैः बाणैः दिगन्तान् दिग्भागान् आवृण्वन्तं आक्रामन्तं वसन्तं वसन्तकालं त्रासात् भयात् अनमितधनुः अप्रह्वीकृतचापस्सन् सम्यक् नतेन मौलिना शिरसा सीतायाः पार्श्वे भवान् नभवतु इत्यवोचत् ॥ ३५

पार्श्व इति ॥ पार्श्वे लोलैः प्रसृतैः परभृतानां कोकिलानां रवैः शब्दैः मुक्तकोलाहलानां बहिर्निस्सारितशब्दानां मल्लीनां मल्लिकानां रेणुभिः परागैः स्थगितवपुषां प्रच्छन्नशरीराणां मन्दरं मन्दतया निर्गतानां भ्रमराणां पटलीभिः समूहैरेव शृङ्खलाभिः सङ्कुलानां निबद्धानां मलयमरुतां मार्गे तिष्ठन् अहं भीतेन लक्ष्मणेन वारितः । अस्मि ॥ ३६

मन्दो वक्ष्ये किमिव जनकं किंनु योगीश्वरो मा-
मित्येवं मे सुतनु मनसो वर्तयन्ति स्म खेदम् ।
रक्ताशोके ज्वलति सविधे लाजवर्षाभिरामैः
पुष्पौघैस्त्वत्परिणयदशां व्यञ्जयन्तः करञ्जाः ॥ ३७

चेतो नैव त्यजति चपलाहेमकोणाभिधाता-
द्धीरोदात्तस्तनितजलदात्ताण्डवारम्भमिच्छन् ।
वातोन्मुक्तैः कुटजकुसुमैर्वासिते शैलशृङ्गे
रक्षःपीडारहितदयिताश्लेषधन्यो मयूरः ॥ ३८

शैलव्यक्तप्रतिविलपितां सान्द्रतापानुविद्धां
तन्वानानां नयनसलिलैर्मातरं ते सबाष्पाम् ।

---

**मन्द इति ॥** भो सुतनु सविधे समीपे रक्ताशोके रक्ताशोकपुष्पे ज्वलति सति लाजानां वर्षैरिव अभिरामैः रम्यैः पुष्पाणां ओघैः समूहैः तव परिणयस्य विवाहस्य दशां अवस्थां व्यञ्जयन्तः सूचयन्तः करञ्जाः तदाख्यवृक्षाः मन्दः अहं जनकं मिथिलाधिपं प्रति किमिव वक्ष्ये किं वा वदामि योगीश्वरः जनकोऽपि मां किं वक्ष्यति इति एवं प्रकारेण मे मनसः खेदं दुःखं वर्तयन्तिस्म कुर्वन्तिस्म ॥ ३७

**चेत इति ॥** वातेन उन्मुक्तैः अवकीर्णैः कुटजकुसुमैः गिरिमल्लिकाभिः वासिते परिमलिते शैलशृङ्गे चपलाभिः विद्युद्भिरेव हेमकोणैः स्वर्णदण्डैः अभिघातः प्रहारो यस्य तस्मात् धीरं गम्भीरं उदात्तं उन्नतं स्तनितं गर्जितं यस्य तस्मात् जलदात् मेघात् ताण्डवस्य नर्तनस्य आरम्भं इच्छन् रक्षः पीडया रहितायाः दयितायाः स्त्रियाः आश्लेषेण आलिङ्गनेन धन्यः मयूरः चेतः मनः नत्यजति तमेव मन्मनः स्मरतीति भावः ॥ ३८

**शैलेति ॥** शैले पर्वते (प्रतिध्वनिव्याजेन) व्यक्तं स्पष्टं प्रतिविलपितं प्रतिप्रलापः यस्यास्तां सान्द्रेण निबिडेन तापेन अनुविद्धां युक्तां ते तव मातरं भूमिं नयनसलिलैः सबाष्पां तन्वानानां कुर्वतीनां प्रबलेन दृढेन मदनोन्मादेन काम॰

पश्यन्तीनां प्रबलमदनोन्मादपर्याकुलं मां
प्रायो जातं किमपि रुदितं व्योम्नि कादम्बिनीनाम् ॥ ३९

देहस्पर्शं मलयपवने दृष्टिसम्भेदमिन्दौ
धाम्नैकत्वं जगति भुवि चाभिन्नपर्यङ्कयोगम् ।
ताराचित्रे वियति वितर्ति श्रीवितानस्य पश्य-
न्दूरीभूतां सुतनु विधिना त्वामहं निर्विशामि ॥ ४०

प्राप्तैस्सख्यं तव नयनयोः पद्मकोशैः प्रबुद्धै-
स्सन्नाहं नस्समयनियतं साधु सन्धुक्षयन्ती ।
सेनायोग्यां सरगिमधुना दर्शयन्ती शुभाशा
सीते नूनं त्वरयति शरत्त्वत्समीपं निनीषुः ॥ ४१

---

कृतचित्तविभ्रमेण पर्याकुलं व्याकुलं मां पश्यन्तीनां कादम्बिनीनां मेघमालानां व्योम्नि आकाशे किमपि रुदितं रोदनं जातं अभूत् प्रायः इत्युत्प्रेक्षे ॥ ३९

देहेति ॥ भोसुतनु मलयपवने मलयमारुते देहस्य (तव) शरीरस्य स्पर्शं इन्दौ चन्द्रे दृष्टेः त्वन्मुखवीक्षणस्य सम्भेदं समागमं जगति लोके धाम्नः त्वन्निवासस्थानस्य एकत्वं अभेदं भुविच अभिन्ने एकस्मिन् पर्यङ्के खट्वायां योगं त्वत्संयोगं ताराभिः नक्षत्रैः चित्रे वियति आकाशे श्रीमतः वितानस्य (त्वत्क्रीडातलपोपरिस्थितस्य) उल्लोचनस्य वितर्ति विस्तारञ्च पश्यन् उत्प्रेक्षमाणः अहं विधिना दैवेन दूरीभुतां त्वां निर्विशामि अनुभवामि ॥ ४०

प्राप्तैरिति ॥ भो सीते तव नयनयोः सख्यं साम्यं प्राप्तैः प्रबुद्धैः विकसितैः कोशैः मुकुलैः नः अस्माकं समये शरत्काले नियतं व्यवस्थितं सन्नाहं युद्धोद्योगं साधु सम्यक् सन्धुक्षयन्ती उद्दीपयन्ती शुभाशा प्रसन्नदिक् शरत् तव समीपं निनीषुः नेतुमिच्छुः सती मां त्वरयति त्वरावन्तं करोति नूनम् ॥ ४१

तातादेशात्सपदि भरते न्यस्तराज्याभिषेकं
या मामेका वनमनुगता राजधानीं विहाय ।
तामेव त्वामुचितशयनां बाहुमध्ये मदीये
दूरे कृत्वा गुणवति मुहुर्दूयते जीवितं मे ॥ ४२

सेतुं बध्वा विपुलमचलैस्सायकैर्वा पयोधौ
कृत्वा लङ्कां स्रजमिव करे खेलतां वानराणाम् ।
अल्पीयोभिस्सुमुखि दिवसैर्योधयन्यातुधाना-
न्कर्णे शीधुं तव रचयिता लक्ष्मणश्चापघोषैः ॥ ४३

रक्षोमौळिस्तबकलवनाद्वैरबन्धे विमुक्ते
गत्वा चोर्वीं गगनपदवीस्वैरिणा पुष्पकेण ।

---

तातेति ॥ तातस्य पितुः आदेशात् शासनेन सपदि तत्क्षणे भरते न्यस्तः निहितः राज्याभिषेको येन तं मां या एका असहाया सीता राजधानीं विहाय वनं अनुगता । हे गुणवति । मदीये बाह्वोर्मध्ये वक्षः स्थले उचितशयनां तामेव त्वां दूरे कृत्वा मे जीवितं मुहुः दूयते दुःखं प्राप्नोति ॥ ४२

सेतुमिति ॥ भो सुमुखि पयोधौ समुद्रे अचलैः पर्वतैः सायकैः बाणैर्वा विपुलं विस्तीर्णं सेतुं बध्वा लङ्कां खेलतां क्रीडतां वानराणां करे (स्थितां) स्रजं मालामिव कृत्वा (कपिहस्तगता माला प्रशिथिला भवतीति प्रसिद्धिः) अल्पीयोभिः अत्यन्तमल्पैः दिवसैः दिनैः यातुधानान् योधयन् राक्षसैर्युद्धं कुर्वन् लक्ष्मणः चापस्य घोषैः तव कर्णे शीधुं मधु रचयिता विरचयिष्यति ॥ ४३

रक्ष इति ॥ भो देवि रक्षसः रावणस्य मौलिस्तबकानां शिरोमञ्जरीणां लवनात् कर्तनात् वैरबन्धे द्वेषपाशे विमुक्ते सति गगनपदव्यां आकाशमार्गे स्वैरिणा स्वेच्छासञ्चारिणा पुष्पकेण उर्वीं निजभूमिं गत्वा च भवतां पूज्यानां वसिष्ठादीनां (कर्तरिषष्ठी) आधिराज्ये साम्राज्ये अभिषेकात् सपदि शीघ्रं सिद्धा-

